सत्यमुग्रस्य बृहतः सं स्रवंति संस्रवाः ।
सं यंति रसिनो रसाः पुनानो ब्रह्मणा हर इंद्रायेंदो परि स्रव ॥५॥
सत्यऽउग्रस्य । बृहतः । सं । स्रवंति । संऽस्रवाः ।
सं । यंति । रसिनः । रसाः । पुनानः । ब्रह्मणा । हरे । इंद्राय । इंदो इति । परि । स्रव ॥५॥

सत्यमुग्रस्य संग्रामे सत्येन शत्रूणामुद्गारयितुः । यद्वा । उद्गूर्णसत्यस्य । यद्वा । यथार्थभूतमुद्गूर्णं बलं यस्य तस्य ॥ पृषोदरादित्वाद्रूपसिद्धिः ॥ बृहतो महतः सोमस्य तव संस्रवाः सम्यक्स्रवणशीला धाराः सं स्रवंति । सम्यग्गच्छंति । किंच रसिनो रसवतस्तव स्वभूता रसाः सं यंति । संगच्छंते । तस्माद्धे हरे हरितवर्ण सोम ब्रह्मणा ब्राह्मणेन मंत्रेण वा पुनानः पूयमानः स त्वमिंद्रार्थं परि स्रव ॥ ॥२६॥

यत्र ब्रह्मा पवमान छंदस्यां३ वाचं वदन् ।
ग्राव्णा सोमे महीयते सोमेनानंदं जनयन्निंद्रायेंदो परि स्रव ॥६॥
यत्र । ब्रह्मा । पवमान । छंदस्यां । वाचं । वदन् ।
ग्राव्णा । सोमे । महीयते । सोमेन । आऽनंदं । जनयन् । इंद्राय । इंदो इति । परि । स्रव ॥६॥

हे पवमान पूयमान सोम त्वदर्थं छंदस्यां सप्तच्छंदोभिः छतां तेषु भवां वाचं स्तुतिं वदन्नुच्चारयन् सोमे सोमाभिषवार्थं ग्राव्णाभिषवं कुर्वता युक्तस्तेनाभिषुतेन सोमेन देवानामानंदं संतोषं जनयन्नुत्पादयन्ब्रह्मा ब्राह्मणो यत्र यस्मिन्देशे महीयते देवैः पूज्यते तत्र हे सोम त्वं परि स्रव ॥

यत्र ज्योतिरजस्रं यस्मिँल्लोके स्वर्हितं ।
तस्मिन्मां धेहि पवमानामृते लोके अक्षित इंद्रायेंदो परि स्रव ॥७॥
यत्र । ज्योतिः । अजस्रं । यस्मिन् । लोके । स्वः । हितं ।
तस्मिन् । मां । धेहि । पवमान । अमृते । लोके । अक्षिते । इंद्राय । इंदो इति । परि । स्रव ॥७॥

हे पवमान यत्र यस्मिँल्लोके ज्योतिः सर्वं तेजोऽजस्रं सर्वदाविनश्वरं वर्तते । यस्मिंश्च लोके स्वरादित्याख्यं ज्योतिर्हितं निहितमस्ति । तस्मिन्नमृते मरणधर्मरहिते अत एवाक्षितेऽक्षीणे लोके मां सोमाभिषवं कुर्वंतं धेहि । निधेहि । तस्मान्मामुत्तमलोकं प्रापयितुं त्वमिंद्राय परि स्रव ॥

यत्र राजा वैवस्वतो यत्रावरोधनं दिवः ।
यत्रामूर्यह्वतीरापस्तत्र माममृतं कृधींद्रायेंदो परि स्रव ॥८॥
यत्र । राजा । वैवस्वतः । यत्र । अवऽरोधनं । दिवः ।
यत्र । अमूः । यह्वतीः । आपः । तत्र । मां । अमृतं । कृधि । इंद्राय । इंदो इति । परि । स्रव ॥८॥

यत्र यस्मिँल्लोके वैवस्वतो विवस्वत्पुत्रो राजा भवति । यत्र च लोके दिव आदित्यस्यावरोधनं भूतानां प्रवेशनं । किंच यत्र लोके यह्वतीर्महत्योऽमूरिमा गंगाद्या आपस्तिष्ठंति । तत्र तादृशे लोके माममृतं मरणधर्मरहितं कृधि । कुरु । मम देवत्वं प्रापयेत्यर्थः । ततः कारणात्परि स्रव ॥

यत्रानुकामं चरणं त्रिनाके त्रिदिवे दिवः ।
लोका यत्र ज्योतिष्मंतस्तत्र माममृतं कृधींद्रायेंदो परि स्रव ॥९॥
यत्र । अनुऽकामं । चरणं । त्रिऽनाके । त्रिऽदिवे । दिवः ।
लोकाः । यत्र । ज्योतिष्मंतः । तत्र । मां । अमृतं । कृधि । इंद्राय । इंदो इति । परि । स्रव ॥९॥

यत्र त्रिदिवे तृतीयस्यां दिवि द्युलोके त्रिनाके । तत्राधरमध्यमोत्तमभावेन त्रीणि स्थानानि संति । तत्र तृतीये नाक उत्तमे स्थाने दिव आदित्यस्यानुकामं कामानुगुणं चरणमस्ति । किंच यत्र यस्मिँल्लोके लोका ज्योतिष्मंतो ज्योतिर्युक्तास्तिष्ठंति । तत्र तादृशे लोके माममृतं कृधि । यथा ममोत्तमलोको भवति तथा त्वमिंद्राय परि स्रव ॥

यत्र कामा निकामाश्च यत्र ब्रध्नस्य विष्टपं ।
स्वधा च यत्र तृप्तिश्च तत्र माममृतं कृधींद्रायेंदो परि स्रव ॥१०॥
यत्र । कामाः । निऽकामाः । च । यत्र । ब्रध्नस्य । विष्टपं ।
स्वधा । च । यत्र । तृप्तिः । च । तत्र । मां । अमृतं । कृधि । इंद्राय । इंदो इति । परि । स्रव ॥१०॥

यत्र यस्मिँल्लोके कामाः काम्यमाना देवा निकामा नितरामवश्यं प्रार्थ्यमाना इंद्रादयश्च विद्यंते । - - - यद्वा । सूर्येण विना कर्माणि न घटंत इति सर्वेषां कर्मणां मूलभूतस्यादित्यस्य विष्टपं सहस्थानं यत्र विद्यते तत्र लोके । स्वधान्नं स्वधाकारेण वा दत्तमन्नं तृप्तिस्तर्पणं हर्षणं हर्षश्च यत्र विद्यते तत्र लोके माममृतं कृधि ॥

यत्रानंदाश्च मोदाश्च मुदः प्रमुद आसते ।
कामस्य यत्राप्ताः कामास्तत्र माममृतं कृधींद्रायेंदो परि स्रव ॥११॥
यत्र । आऽनंदाः । च । मोदाः । च । मुदः । प्रऽमुदः । आसते ।
कामस्य । यत्र । आप्ताः । कामाः । तत्र । मां । अमृतं । कृधि । इंद्राय । इंदो इति ।
परि । स्रव ॥११॥

यत्र यस्मिँल्लोक आनंदादय आसते । तेषामल्पो भेदो द्रष्टव्यः । यत्र च लोके कामस्य काम्यमानस्य देवस्य सर्वे कामा आप्ताः प्राप्ता भवंति तत्र माममृतं कृधि । एतत्तु त्वया विना न घटत इति हे सोम त्वं परि स्रव ॥ ॥२७॥

य इंदोरिति चतुर्ऋचमेकादशं सूक्तं । ऋष्याद्याः पूर्ववत् । तथा चानुक्रम्यते । य इंदोश्चतुष्कमिति ॥ गतः सूक्तविनियोगः ॥

य इंदोः पवमानस्यानु धामान्यक्रमीत् ।
तमाहुः सुप्रजा इति यस्ते सोमाविधन्मन इंद्रायेंदो परि स्रव ॥१॥
यः । इंदोः । पवमानस्य । अनु । धामानि । अक्रमीत् ।
तं । आहुः । सुऽप्रजाः । इति । यः । ते । सोम । अविधत् । मनः । इंद्राय । इंदो इति ।
परि । स्रव ॥१॥

पवमानस्य पूयमानस्येंदोः सोमस्य धामानि स्थानानि द्रोणकलशादीनि यद्वा धामानि तेजांसि यो ब्राह्मणोऽन्वक्रमीत् अनुक्रामति अनुगच्छति तं जनं सुप्रजाः शोभनप्रजननः कल्याणपुत्रादिप्रजायुक्त इत्याहुः ॥ नित्यमसिच् प्रजामेधयोरित्यसिच् समासांतः ॥ यः सोममभिषुणोति स पुत्रादियुक्तो भवतीत्यर्थः । किंच हे सोम यो मनुष्यस्ते त्वदर्थं मनोऽविधत् करोति । यद्वा । ते त्वदीयं मनोऽविधत् परिचरति । विधतिः परिचरणकर्मा । तमपि कल्याणजननमित्याहुः । तस्मात्त्वं परि स्रव ॥

ऋषे मंत्रकृतां स्तोमैः कश्यपोद्वर्धयन्गिरः ।
सोमं नमस्य राजानं यो जज्ञे वीरुधां पतिरिंद्रायेंदो परि स्रव ॥२॥
ऋषे । मंत्रऽकृतां । स्तोमैः । कश्यप । उत्ऽवर्धयन् । गिरः ।
सोमं । नमस्य । राजानं । यः । जज्ञे । वीरुधां । पतिः । इंद्राय । इंदो इति । परि । स्रव ॥२॥

ऋषिः स्वात्मानं प्रत्याह । हे ऋषे सूक्तद्रष्टर्हे कश्यपात्मन् त्वं मंत्रकृतामृषीणां स्तोमैः स्तोत्रैर्गिरः स्तुतिरूपा वाच उद्वर्धयन्नुपर्युपरि वर्धयन्राजानं सर्वेषां स्वामिनं तं सोमं नमस्य । पूजय ॥ नमसः पूजायां नमोवरिव इति क्यच् ॥ यः सोमो वीरुधां वनस्पतीनां पतिः पालको जज्ञे जातः तं नमस्य । हे सोम यथात्मना सुतो भवसि तथा परि स्रव ॥

सप्त दिशो नानासूर्याः सप्त होतार ऋत्विजः ।
देवा आदित्या ये सप्त तेभिः सोमाभि रक्ष न इंद्रायेंदो परि स्रव ॥३॥
सप्त । दिशः । नानाऽसूर्याः । सप्त । होतारः । ऋत्विजः ।
देवाः । आदित्याः । ये । सप्त । तेभिः । सोम । अभि । रक्ष । नः । इंद्राय । इंदो इति ।
परि । स्रव ॥३॥

सप्त दिशः । सोमो यस्यां दिशि वर्तते तद्व्यतिरिक्ताः सप्त भवंति । ता नानासूर्या नानाविधैः सूर्यैरधिष्ठिता ऋतवो भवंति । नानालिंगत्वादृतूनां नानासूर्यत्वमित्याम्नानात् । यद्वा । नानासूर्या इति दिग्विशेषणं । तथा होतारो वषट्कर्तारो होत्रादयः सप्तर्त्विजो भवंति । किंच सप्तादित्या अदितेः पुत्रा धात्रादयो मार्तंडवर्जिता ये सप्त देवाः संति । एतत्त्वष्टौ पुत्रासो अदितेः । ऋ॰ १०.७२.८. । इत्यत्र प्रपंचयिष्यते । हे सोम तेभिस्तैर्दिगादिभिः सर्वैर्नोऽस्मानभि रक्ष । एतत्तु त्वया विना न घटत इति तस्मादिंद्रायेंदो परि स्रव ॥

उपाकरणोत्सर्जनयोर्मंडलाद्यंतहोमे यत्ते राजन्नित्येषा । सूत्रितं च । यत्ते राजञ्छृतं हविरिति द्वृचाः समानी व आकूतिरित्येका । आ॰ गृ॰ ३. ५. ७. । इति ॥

यत्ते राजञ्छृतं हविस्तेन सोमाभि रक्ष नः ।
अरातीवा मा नस्तारीन्मो च नः किं चनाममदिंद्रायेंदो परि स्रव ॥४॥
यत् । ते । राजन् । शृतं । हविः । तेन । सोम । अभि । रक्ष । नः ।
अरातिऽवा । मा । नः । तारीत् । मो इति । च । नः । किं । चन । आममत् । इंद्राय ।
इंदो इति । परि । स्रव ॥४॥

हे राजन् सर्वेषां कर्मसाधनत्वेन स्वामिन् हे सोम ते त्वदर्थं शृतं पक्वं यत्हविरस्ति ॥ शृतं पाके । पा॰

६.१.२७.। इति निष्ठायां निपातितः ॥ तेन हविषा नोऽस्मानभि रक्ष। अभिपालय। तस्मात्त्वदभिरक्षितानस्मानरातीवारातिवाञ्शत्रुर्नोऽस्मान्मा तारीत्। मा वधीत्। किंच नोऽस्माकं किं चन किंचिदपि धनादिकं शत्रुर्मो आममत्। मा हिंसीत्। यदेतदेतैः सूक्तैरुक्तं तद्यथास्माकं भवति तथा हे इंदो इंद्राय परि स्रव। एवं स्वादिष्ठयेत्यादिभिरेतदंतैः सूक्तैर्बहुविधं सोममाहात्म्यमभ्यधायि। तस्मादैहिकामुष्मिकफलसिद्धये सोमयागः करणीय इत्युक्तं भवति ॥ ॥२८॥

॥ इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे दाशतय्यां नवमे मंडले सप्तमोऽनुवाकः समाप्तं च नवमं मंडलं ॥